SRIRANGAM SRI SANKARA GURUKULA SERIES No. 5.

# KUMĀRASAMBHAVACHAMPŪ

BY

ŚRĪ ŚARABHOJI MAHĀRĀJA

*of Tanjore.*

EDITED BY

*Gurubhaktasikhamani Sastraprasarabhushana*

**T. K. BALASUBRAHMANYA AIYAR, B.A.,**

*Dharmadhikari, Sri Sankaragurukulam, Srirangam.*



SRIRANGAM

SRI VANI VILAS PRESS.

1939.





# PREFACE.

KUMARASAMBHAVACHAMPU is one of the four fine works of the illustrious Patron of Sanskrit learning and literature King Serfoji II, known in Sanskrit literature as Maharaja Sarabhoji who ruled over Tanjore from 1800-1832 A. D. During his reign he made Tanjore the centre of attraction for all *Savants* in Sanskrit, Tamil and Mahratti. Himself a good scholar in Sanskrit and Mahratti, he attracted to his court a number of learned pandits and liberally patronised them by grants of land and other rich rewards. His name is immortalised by the Tanjore Sarasvati Mahal Library which he founded and which is named after him. This Library is one of the most valuable Libraries in the whole of India and has been greatly appreciated by all scholars Oriental as well as Occidental. It contains several rare, precious, and hitherto unpublished works in all branches of Sanskrit learning and one such work is this *Kumarasambhavachampu* composed by the Maharaja himself. It closely follows the Kumarasambhava of the renowned Kalidasa and its diction often reminds us of the said Kavya.

We have brought out this edition with the help of two Manuscripts—one from the Tanjore Sarasvati Mahal Library and the other from the Sringeri Mutt Library. Our thanks are due to Vidyasagara Vidyavacaspati Prof. P. P. Subrahmanya Sastri M.A., for his fine Foreword and to Pandit S. Subrahmanya Sastri of Tanjore, now at Adyar, our collaborator in all Sanskrit publications, for having kindly gone through the proofs.

Sri Sankaragurukulam
Srirangam.

*T. K. Balasubrahmanyam.*

# FOREWORD

BY

*Vidyasagara Vidyavacaspati P. P. Subrahmanya Sastri, B. A. (Oxon), M. A. (Madras), Professor of Sanskrit, Presidency College, Madras.*

From the Upanishadic age onwards, many Hindu Kings belonging to the Warrior caste have been not only great patrons of learning and art but have been themselves learned men also. And some of them have also been distinguished authors as well,

Some modern scholars, notably Macdonell, think that these kingly authors must have had their works written for them—a gratuitous assumption. Even today in comparatively modern times, we know of not a few Kings of Travancore and Cochin who were not only great Kings but greater writers and authors of works of established reputation.

To this class of author-kings belongs King Serfojee II who ruled Tanjore from 1800 to 1832 A. D. King Serfojee II deserves in full the gratitude of the Oriental world as he it was who organised the famous Saraswati Mahal Palace Library at Tanjore, by ordering not only the copying of many valuable manuscripts but also by spending his valuable time and financial resources in buying up as many manuscripts as were available for sale during his pilgrimage to Benares. It is in recognition of this unparallelled munificence that the Royal Library at Tanjore, which is surely one of the richest and most costly libraries for Oriental Manuscripts, is justly called even today the Tanjore Maharaja Serfojee Saraswati Mahal Palace Library.

King Serfojee had many learned sabhas under his patronage and patronised as many as 30 erudite scholars in these sabhas.* There are at least four Sanskrit works to his credit, still preserved in the Tanjore Library—Smritisarasamuccaya,

---

* For details see pp. 40-41 of the "Guide to the Tanjore Palace Library" by Professor P. P. S, Sastri. Presidency College, Madras, 1934.

Smritisangraha, Mudraraksasacchaya and Kumarasambhavacampu. Of these t last, Kumarasambhavacampu is *par excellence* his best work. The work is writt in an easy, flowing and elegant style and recalls to mind famous expressions ai ideas contained in Kalidasa's Kumarasambhava. The Royal author is conscious the merits of Bhojadeva's Ramayanacampu as a standard campu work and follov in Bhojadeva's footsteps with an ease and grace all his own.

The theme of the work and the excellent and easy flow of expression an ideas which characterise the work, contribute to make it as a fit one to be placed in th hands of those who are beginning to make their acquaintance with Classical Sanskrit.

Presidency College,
Madras. 16—8—40.

*P. P. Subrahmanya Sastri.*

*"Frontispiece to the Kumarasambhavachampu"*



The Durbar Hall at the Tanjore Palace with the white Marble statue of Sri Sarabhoji Maharaja in the Centre.

अस्ति स्वस्तरुबृन्दसुन्दरतरच्छायोल्लसत्कंदर-
क्रीडत्किंनरमानिनीजनमनःस्वाच्छन्द्यसाक्षात्कृती ।
लोकालोककुलाचलादिकमहाशैलाग्रणीर्देवता-
रूपो नाम हिमाचलो महिमभूर्भूमोत्तरस्यां दिशि ॥ ७

यं सर्वेऽपि महीधरा विदधिरे वत्सं धरित्रीं पुरा
दोग्धुं श्लाघ्यगुणस्य यस्य न हिमं सौभाग्यमुल्लुम्पति ।
इन्दोः पूर्णकलस्य लाञ्छनमिव स्ववारसीमन्तिनी-
लीलामण्डनसंपदं वितनुते यो धातुसंपत्तिभिः ॥ ८ ॥

यत्र च, महादेव इव हिमखण्डपाण्डरे, पुरुषोत्तम इवोत्फुल्लसरसीरुहलोचने, कमलासन इवोपगतहंसमण्डले, सुरलोक इव सुपर्ववंशाधिष्ठाने, कैलास इव सर्वमङ्गलावासे, वैकुण्ठ इव हरिणाधिष्ठिते, सत्यलोक इव सहिरण्यगर्भे, पुण्डरीकाक्षवक्षस्तट इव वनमालालंकृते, काव्यप्रबन्ध इव नानावर्णधातुविचित्रे, रत्नसानाविव हैमखण्डगण्डोपले, परशुराम इवाधरितराजमण्डले, महाकासार इव सर्वतोमुखविचलत्पुण्डरीके, हिमोत्पत्तिभूमावप्यहिमहिते, धृतक्षमेऽपि दुरासदे, गङ्गाप्रभवेऽप्यभीष्मे, संततनिष्यन्दमानतुहिनासारधौतरक्तं पद्मपद्यतामपि किरातानां नखरायुधनखरन्ध्रमुक्तमुक्ताफलान्येव विभिन्नवनकुम्भिकेसरिपदवीपरिज्ञानहेतवः, सातपश्रृङ्गाश्रयणमेवाधःसानुगतसिद्धानां वृष्टिबाधानिवारणम्, धातुरसन्यस्ताक्षरा भूर्जत्वच एव सुरसुन्दरीणाम-



॥ श्रीः ॥

# ॥ कुमारसंभवचम्पूः ॥

श्रीशरभोजिमहाराजविरचिता ॥



## प्रथम आश्वासः

नृत्तारम्भपिनद्धपिङ्गलजटासंदंशनिष्पीडन-
स्निग्धोन्मृष्टकलङ्कचन्द्रविगलत्पीयूषधारोल्बणैः ।
चञ्चन्मस्तकनिष्पतत्सुरनदीपूरैर्जगत्पावयन्
कल्याणं विदधातु नः शुभकरः श्रीचन्द्रमौलीश्वरः ॥ १ ॥

मातर्वाग्देवि किं ते शरभनरपते वत्स कार्यं समास्ते
सौब्रह्मण्योद्भवार्थे रुचिरमृदुपदे चम्पुकाव्येऽभिलाषः ।

विज्ञातं हैमशैलस्फटिकमणिशिलासंघसंपातजात-
स्फीताटोपाभ्रगङ्गाप्रवहणसदृशाः सन्तु ते वाग्विलासाः

राज्ञां भोसलवंशवारिधिसुधाधाम्नां यशोजन्मभू-
र्देवानाममरावतीव नगरी तञ्जापुरी विश्रुता ।
लक्ष्मीनित्यनिवासमन्दिरमहापद्माकृतिर्देवता-
ब्रह्माद्यालयपूरितोत्सवसमाजोल्लासिता शोभते ॥ ३ ॥

तत्र श्रीपरमेश्वरार्चनकलाधौरंधरीशोभिनो
मालोजिक्षितिपालमौक्तिकमणेर्वंशेऽभवत्पावने ।
इक्ष्वाकोरिव संततौ दशरथः षड्दर्शनीसारवि-
त्प्रख्यातस्तुलजेन्द्रभूवलरिपुः साहित्यविद्यानिधिः ॥ ४

तत्पुत्रः शरभोजिवर्मनृपतिः साहित्यसाम्राज्यभू-
र्भोजो रामकथासुधामधुरितं चम्पूप्रबन्धं यथा ।
सालंकारचमत्क्रियारसपदं शुद्धं च संदर्भतः
संग्रथ्नाति कुमारसंभवमहाचम्पूप्रबन्धोत्तमम् ॥ ५ ॥

पद्यं हृद्यमपीह गद्यरहितं धत्ते न हृद्यास्पदं
गद्यं पद्यविवर्जितं च भजते नास्वाद्यतां मानसे ।
साहित्यं हि तयोर्द्वयोरपि सुधामाध्वीकयोर्योगव-
त्संतोषं हृदयाम्बुजे वितनुते साहित्यविद्याविदाम् ॥ ६

नङ्गलेखाः, कीचकरन्ध्रेषु दरीमुखोद्गतसमीरणपूरणमेव किंनरगणोपगा-नम्, कण्डूलवेतण्डकपोलकषणोद्भूतसरलगन्ध एव सानुसुरभीकरणपटुः वनितासखवनेचराणां ज्योतिर्लता एव सुरतप्रदीपाः, अतिघनजघन-पयोधराणामश्वमुखीनां तुहिनदुर्गमेऽपि मार्गे मन्दमेव गमनम्, दिवा भीत इव दिवाकराद्गुहालीनोऽन्धकारः, इतस्ततश्चटुलचञ्चलवालचमरी-गणैरेवान्वर्थितो गिरिराजशब्दः, प्रियतमकरकमलापहृतांशुकानां किं-पुरुषाङ्गनानां धाराधरा एव तिरस्कारिण्यः, चटुलमृगानुधावनपरिश्रा-न्तकिरातानां भागीरथीशीकरशीतलदेवदारुवनवातसेवैव श्रमापनोद-हेतुः, ऊर्ध्वमुखसूर्यमयूखैरेव शृङ्गाग्रसरःसरसीरुहावबोधः, प्रजापतिरे-वाधिष्ठातेति विश्वातिशायिनी गुणसमृद्धिः ॥

पितॄणां मानसीं कन्यामुपयेमे स भूधरः।
मेनामुत्पादयामास तस्यां मैनाकमात्मजम् ॥ ९ ॥

दक्षावज्ञानमुक्तस्वतनुरथ सती पूर्वपत्नी पुरारे-
रुत्साहेनेह नीतावजनि हिमवता श्रीर्यथा मेनकायाम्।
आसीदाशाप्रसादो ववुरपरजसो वायवः शङ्खशब्दा-
त्पाश्चात्या पुष्पवृष्टिर्जननदिनमभूत्प्राणिसौख्याय तस्याः ॥

जाता रत्नशलाकिकेव शुशुभे बन्धूदिता पार्वती-
त्याख्याताभिजनं कला प्रतिदिनं चान्द्रीव लब्धोदया।

दृष्ट्यासेचनकं दधत्यभिनवं रूपं हिमाद्रेः पितुः
पुत्रित्वेऽप्यपुनादभूषयदपि स्वेन त्रिमार्गेव तम् ॥ ११ ॥

सा सौवर्णधुनीतले सिकतिले देशे सखीभिः समं
क्रीडामन्वभवद्दधार सकलाः प्राग्जन्मविद्या अपि ।
आपादं स्फुरदुत्तरोत्तरसमस्ताङ्गाभिरूप्यं वपु-
स्तस्याः शोभयति स्म धातुरपुराशिल्पं वयो यौवनम् ॥ १२ ॥

कन्यां तां पितुरन्तिके सुरमुनौ वीक्ष्यैकदा शंकर-
स्यार्धाङ्गीभवितेयमित्युदितवत्युत्सृष्टवार्तान्तरः ।
देवं चन्द्रकलाधरं निजसुतामभ्यर्थनाभङ्गतो
भीतो ग्राहयितुं शशाक न गिरिर्मानैषिणो ह्युन्नताः ॥ १३ ॥

यदैवोदस्राक्षीत्पितृपरिभवात्पूर्वजनने
शरीरं सत्येतत्प्रभृति गतसङ्गः पशुपतिः ।
तपस्तप्तुं पश्चाद्रुचिरमृगनाभीपरिमले
हिमाद्रेः प्रस्थेऽसाववसदुपगङ्गोक्षिततरौ ॥ १४ ॥

सर्वेषां तपसां श्रुतिस्मृतिवचोनुष्ठानपारंपरी-
गम्यानां फलदायकोऽपि भगवान् श्रीचन्द्रमौलीश्वरः ।
ब्रह्मोपेन्द्रमहेन्द्रवायुवरुणाद्यैश्वर्यदाताऽपि सन्
संकल्पं तपसे चकार मनसा केनापि कामेन सः ॥ १५ ॥

प्राणानायम्य नासाशिखरकलितदृक्सुस्थिरः संवृतास्यो
विष्टभ्योरो निरुद्धाखिलकरणगतिर्योगशास्त्रोदितेन ।
मार्गेणात्मस्वरूपं मनसि कृतसमाधानयोगे विशुद्धे
ध्यायन्ध्येयोऽखिलानामपि विभुरभजद्योगमार्गं पुराणम् ॥

एवं तत्र तपस्यतीन्दुमकुटे विश्वाधिके योगिनां
पूर्वेषामपि वेदबृन्दशिखरैर्लक्ष्ये यथा तत्त्वतः ।
भूर्जत्वग्वसना नमेरुकुसुमोत्तंसा गणाः पर्वते
तस्मिन्गाङ्गपयःपवित्रितशिलारम्येऽवसन्निर्भराः ॥ १७ ॥

महोक्षोऽप्येतस्मिन्हिमघनशिलावज्रकठिनैः
खुराग्रैरुल्लिख्य प्रकटितमदावेशरभसः ।
कथंचिद्दृष्टः सन्गवयमृगबृन्दैर्भयवशा-
द्विनम्रैः सिंहानां ध्वनिषु विननादाक्षमतया ॥ १८ ॥

अथ स गिरिराजः, अखिलजनानन्दकतपश्चर्यालंकर्मीणस्य, समस्तसुरासुरस्तोमवन्दितचरणारविन्दस्य, अनवरतमन्दाकिनीनिष्यन्दकन्दलसुन्दरतरेन्दुकलाबन्धुरजटाबन्धस्य, श्रुतिस्मृतीतिहासपुराणागमादिप्रतिपादितविश्वाधिकभावस्य, अकृतकवचोनिकुरुम्बलक्ष्ययाथात्म्यस्य तपस्यतो भगवतः पुरारातेः शुश्रूषायै प्रयतां निजां तनूजां प्रेषयामास ॥

संमृष्टामथ वेदिकां विदधती पुष्पाणि सर्वाणि सा
बल्यर्थान्यपचिन्वती नियमविध्यर्थानि पाथांसि च ।
बर्हिर्भिः सममानयन्त्युपचरन्त्येवंप्रकारैस्तदा
देवं तं तपसि स्थितं गिरिसुता शुश्रूषयाऽतोषयत् ॥ १९ ॥

शुश्रूषां तन्वतीत्थं हिमगिरितनया देवदेवस्य ताव-
त्काले काले न जातु श्रमलवमभजत्सौकुमार्यान्विताऽपि ।
तन्मूर्धोत्तंसचन्द्रस्रवदमृतरसैः शान्तसावित्रखेदा
ध्यायन्ती देवदेवं हृदयसरसिजाभ्यन्तरे मङ्गलाय ॥ २० ॥

देवास्तारकपीडिताः सुरपतिं कृत्वाऽग्रतो वैधसं
धामावाप्य तदा विषण्णवदना नत्वा विधिं तुष्टुवुः ।
विश्वोत्पादनरक्षणाप्ययकृते मूर्तित्रयं बिभ्रतो
माहात्म्यं भवतस्त्वदेकसुगमं नेशा वयं वेदितुम् ॥ २१ ॥

त्वं हेतुः सकलस्य नास्ति भवतो हेतुः समस्तस्य च
त्वत्तोऽन्तस्तव नान्तवागपि तथा सर्वस्य चेष्टं भवान् ।
नेशः कश्चन तेऽस्ति शाश्वतगिरामस्याश्रयस्त्वां विदु-
र्निर्लेपं पुरुषं परात्परतरं होतव्यहोत्रादिकम् ॥ २२ ॥

इत्यादिस्तुतिभिः प्रसन्नवदनो वेधाश्चतुर्भिर्मुखैः
प्रत्यूचे त्रिदशान्यथापुरमुखश्रीका भवन्तो न किम् ।

इन्द्रादेः कुलिशादि कुण्ठितपुरावस्थं कुतः कारणा-
दित्युक्ते विधिना सहस्रनयनो वाचस्पतिं प्रैरयत् ॥ २३ ॥

ऊचे वाक्पतिरद्य शत्रुनिवहैराक्रान्तमस्मत्पदं
त्वत्तः प्राप्तवरोऽवलिप्तहृदयो यस्तारकाख्योऽसुरः।
लोकोपप्लवधूमकेतुरिव स स्वस्वाधिकारोचिता-
नस्मान्पीडयति प्रसह्य बलिनस्तस्येप्सितं कुर्महे ॥ २४ ॥

असौ चण्डभानुर्यथाकालक्लृप्तातपवृद्धिह्रासस्वभावोऽपि बलवत स्तस्य पुरोविलासवापिकाकमलमुकुलविकासमात्रोपयुक्तमातपं करोति एष शशाङ्कोऽपि निसर्गसिद्धकलोपचयापचयोदयास्तमयोऽपि सर्व दैव सकलाभिः कलाभिस्तं निषेवमाणः केवलां हरचूडामणीकृतां कल न गृह्णाति। अयं च सदागतिः यथासमयासिद्धतारतम्यगतिवेगोऽपि तद्विलासोद्यानकुसुमपतनभयात्तालवृन्तानिलौपम्यमावहति। अमी च वसन्ताद्यः षडृतवः यथातथसंपन्नप्रसूनजातयोऽपि युगपदेव सर्वपुष्प संभारजागरूका उद्यानपाला इव संततमेव तमुपासते। एष च रत्ना करः स्वस्वकालोचितपरिणाममुक्तादिरत्ननिकरोऽपि तदुपायनयोग्यानि रत्नानि यथावसरं प्रतीक्षमाण उपदीकरोति। एते च जाज्वल्यमान मणिमस्तका वासुकिप्रमुखा भुजंगमाः स्थिरप्रदीपतामापन्नास्तमुपसे वन्ते। किं बहुना, महेन्द्रोऽपि तदनुग्रहावसरं प्रतिपालयन्कल्पवृक्षो द्भूतभूषणोपदाभिस्तमाराधयति ॥

आसेव्यमानोऽपि स एवमुच्चैः क्लिश्नाति लोकत्रितयं दुरात्मा ।
प्रतिक्रियाभिः प्रशमं प्रयायान्न तूपकारैरिति सुप्रसिद्धम् ॥ २५ ॥

छित्त्वा नन्दनपादपा विरचिताः स्वोद्यानगुप्तिद्रुमा-
स्तेनासौ सुरसुन्दरीभिरधुना बन्दीकृताभिस्तथा ।
उद्यद्बाष्पमुदीर्णतापभरितश्वासं चलत्कङ्कणं
चञ्चन्मौक्तिकहारसुन्दरकुचं सच्चामरैर्वीज्यते ॥ २६ ॥

शृङ्गाण्युत्पाट्य मेरोर्निजभवनसरस्तीरलीलाचलत्वं
नीतानि स्वस्तटिन्याः कनककमलिनी तेन नीताऽऽत्मवापीः ।
स्वर्गौकोभिर्विमानैस्तदुपहतिभयान्न क्रियन्ते विहारा
दत्तं हव्यादिकर्मण्यपहरति बली यज्वभिर्हव्यवाहात् ॥ २७ ॥

किं चोच्चैःश्रवसं जहार स बलादिन्द्रस्य कालार्जितं
मूर्तं सद्यशसः स्वरूपमिव नस्तस्मिन्नुपाया वृथा ।
क्रूरे वीर्यवदौषधानि विकृते व्याधौ यथा तज्जय-
प्रत्याशाऽपि न यत्सुदर्शनमदःकण्ठेऽर्पितं निष्कवत् ॥ २८ ॥

दन्तिनस्तस्य मेघेषु पुष्कलावर्तकादिषु ।
अभ्यस्यन्ति तटाघातक्रीडां निर्जितदिग्गजाः ॥ २९ ॥

तस्मादस्य दुरात्मनः प्रशमने सेनान्यमीप्सामहे
तं कृत्वा पुरतः पुनः श्रियमसौ प्रत्याहरेद्गोत्रभित् ।

इत्युक्ते गुरुणा वचस्यथ जगौ वाणीं सरोजासनः
　कामोऽयं भवतां भविष्यति परं कालः प्रतीक्ष्यो भवेत् ॥ ३०

मत्तः प्राप्तवरोऽसुरः पुनरसौ मत्तः क्षयं नार्हति
　च्छेद्यो न स्वकृतो विषद्रुरपि तं हन्यान्महः शांभवम् ।
नान्यस्तं विषहेत संयति महादेवः परं ज्योतिषां
　ज्योतिर्नैव मया न वाऽपि हरिणा निर्ज्ञातरूपः क्वचित् ॥ ३१

शंभोः संयमनिश्चलं पुनरुमारूपेण चित्तं समा-
　क्रष्टुं हे त्रिदशा यतध्वमधुनाऽयस्कान्तलोहोपमम् ।
वोढुं वीर्यमुमा क्षमेत तदनु प्रादुर्भवन्धूर्जटे-
　रात्मा तारकनिग्रहेण भवतां क्षेमं सदा धास्यति ॥ ३२ ॥

इति व्याहृत्य अन्तर्हिते सरसिजासने महेन्द्रमुखा बर्हिर्मुखा मनसा कृतकर्तव्यनिश्चयाः सन्तः पुनरपि दिवमवजगाहिरे ॥

तत्कार्यद्विगुणत्वरेण मनसा कंदर्पमागात्कृती
　वृत्रारिर्मदनोऽपि चापमबलाभ्रूचारु कण्ठे निजे ।
आसज्यात्मसुहृन्मधोः करतले न्यस्तप्रसूनायुधो
　भूत्वा प्राञ्जलिरग्रतः सुरपतेरासीदुदाराकृतिः ॥ ३३ ॥

इति श्रीभोसलकुलजलधिकौस्तुभचोलवसुंधराधुरंधरतुलजामहाराजकुमारशरभोजिमहाराज-
विरचिते कुमारसंभवमहाचम्पुकाव्ये प्रथम आश्वासः ॥

———

# द्वितीय आश्वासः ॥

तस्मिन्नक्ष्णां सहस्रं युगपदथ हरेर्लग्नमासीत्प्रभूणां
प्रायेण स्वाश्रितेषु स्वफलपरतया गौरवं चञ्चलं स्यात् ।
सुत्राम्णादिष्टभूमिः सपदि मनसिजो भर्तुराज्ञां स्वमूर्ध्ना
गृह्णन्वक्तुं मिथस्तं व्यरचयत समारम्भमेवंप्रकारम् ॥ १ ॥

देवाज्ञापय कार्यमस्मि तव तत्कर्तुं स्थितः केन वा
तावत्तावकलोकनिर्जयधिया दीर्घं तपस्तप्यते ।
सोऽयं संहितसायकस्य धनुषः स्यान्मे निदेशस्थितः
कस्ते मुक्तिमसंमतोऽभिलषति स्यादेष सुभ्रूजितः ॥ २ ॥

शत्रोः कस्य तवाद्य नीतिनिपुणस्याप्यर्थधर्मौ मया
बाध्यौ तौ वद पीडयानि मनसा कामेकपत्नीव्रताम् ।
त्वं वाञ्छस्यधुना करोमि सुतनुं तां त्वद्वशां त्वं कया .
धूतः कोपनया तनोमि सुदतीं तां पुष्पशय्याश्रयाम् ॥ ३ ॥

विश्रान्तिं लभतां तवायुधमिदं वज्रं प्रसीदाधुना
स्वामिन्मामकसायकार्दितमनाः स्त्रीभ्योऽपि भीतोऽस्तु कः ।
पुष्पास्त्रोऽपि तव प्रसादवशतो लब्ध्वा सहायं मधुं
कुर्यामेकमहं पिनाकधनुषः शंभोश्च धैर्यच्युतिम् ॥ ४ ॥

अथेत्थं वदन्तं स्मरं तं मरुत्वान्
समाक्रान्तपादं स्वसंकल्पितेऽर्थे ।
कृतात्मीयशक्तिप्रकाशं बभाषे
सखे त्वं च वज्रं मम द्वे सहाये ॥ ५ ॥

सारं तेऽहमवैमि तत्खलु गुरुण्यप्यत्र कार्ये भवान्
आज्ञप्यो भवता वृषाङ्कविषयेऽप्याशंसता विक्रमम् ।
बाणानां प्रतिपन्नकल्पमिदमेवास्मच्चिरप्रार्थितं
सेनान्यं भववीर्यसंभवममी वाञ्छन्ति बर्हिर्मुखाः ॥ ६ ॥

स च त्वया हरोऽधुना समाधियोगमास्थितो
यथा हिमाद्रिकन्यकाहृतान्तरो भवेत्तथा ।
यतस्व सा नियोगतः पितुस्तपस्यवस्थितं
निषेवते हरं तमित्युदन्त एष विश्रुतः ॥ ७ ॥

काम त्वं कार्यसिद्ध्यै व्रज झटिति तवानन्यलभ्यं यशः स्या-
न्मित्रं ते साहचर्यान्मधुरपि भवितानुच्यमानोऽपि देवैः ।
इत्याज्ञाप्यैनमुच्चैः परिमलसुरभीभूतदिङ्मण्डलां ता-
मिन्द्रो मन्दारमालामदित मनसिजायेक्षमाणः सहर्षम् ॥

अथ स मकरध्वजः ऐरावतकुम्भस्थलास्फालनकर्कशेन सुरपतेर्ह-

लेनोपलालिताङ्गः अभिमतेन सहायेन माधवेन साशङ्कया गत्या स्मृतः शनैः शनैः हैमवतं स्थाण्वाश्रममुपजगाम ॥

तदाश्रमपदे तदा नियमिनां मुनीनां मनो-
विभेदकरणे पटुर्मधुरभून्मनोभूमतः ।
तथोष्णकिरणे दिशं भजति यक्षनाथाश्रितां
शुचा दिगपि दक्षिणाऽनिलमिषादिव न्यश्वसीत् ॥ ९ ॥

आशिञ्जन्नूपुरोपस्कृतसुतनुपदस्पर्शलेशानपेक्षं
स्कन्धादारभ्य पुष्पाण्यभजत सकलाशोकवृक्षस्तदानीम् ।
सद्यश्चूतप्रसूने भ्रमरततिरभून्मारनामाक्षराभा
निर्गन्धं कार्णिकारं कुसुममपि बभौ वर्णतोऽतिप्रकृष्टात् ॥१०॥

बभुर्बालेन्दुवक्राणि पलाशान्यपि तत्क्षणम् ।
वसन्तसंगतारण्यस्थलीनां नखराङ्कवत् ॥ ११ ॥

प्रियालवृक्षमञ्जरीरजःकणौघविघ्नित-
स्वदृष्टिपातमुन्मदा मृगावली वने बभौ ।
चुकूज मानिनीमनोभिदाविधानदक्षिणः
पिकोऽपि चूतसारजस्वकण्ठनादसुन्दरः ॥ १२ ॥

तत्र किंपुरुषस्त्रीणां गात्रेषु स्वेदबिन्दवः ।
स्थाने हिमानामभवन्नादेशाः स्थानिनामिव ॥ १३ ॥

अथ तत्र तपस्यन्तो महर्षयः अकालसंभूतां वसन्तलक्ष्मीमव-लोक्य मनोनिग्रहाय कृतप्रयत्ना अपि कथंचिदपि नेशांबभूवुः ॥

तं देशं मदने गृहीतसुमनश्चापे प्रपन्ने समं
रत्याथ क्रियया वितेनुरखिलद्वन्द्वानि भावं मिथः ।
लोलस्त्वः प्रियया समं मधु पपौ पुष्पैकपाले मृगः
स्पर्शार्मीलितलोचनामपि मृगीं शृङ्गादकण्डूयत ॥ १४ ॥

गण्डूषवारि करिणे प्रददौ करेणु-
रम्भोजगन्धि मधुरं सदयानुरागम् ।
अर्धोपभुक्तबिसखण्डमपि प्रियायै
प्रादाद्रथाङ्गविहगः परिपूर्णरागः ॥ १५ ॥

श्रमजलकणिकाभिर्गीतिकालोद्गताभि-
र्विहितरुचि चुचुम्बे किंनरेण प्रियास्यम् ।
तरुभिरपि लतानां पुष्पगुच्छस्तनीनां
फलभरनतशाखादोभिराश्लिष्टतासीत् ॥ १६ ॥

हरः श्रुताप्सरोगीतिरप्यविक्रियमानसः ।
आत्मेश्वरेषु विघ्नानां न प्रभावोऽस्ति जातुचित् ॥ १७ ॥

अथ लतागृहद्वारगतो वामप्रकोष्ठार्पितहेमवेत्रलतो भगवान्नन्दी मुखार्पितैकाङ्गुलिसंज्ञया चापलं मा कुरुतेति गणानन्वशात् ॥

निष्कम्पद्रु सुनिश्चलभ्रमरकं मूकाण्डजं तत्क्षणं
शान्ताशेषमृगप्रचारमभवत्तच्छासनात्काननम् ।
चित्रं न्यस्तमिवास्य दर्शनपथं त्यक्त्वा प्रयाणे पुरः-
शुक्रं पान्थ इवाविशत्पुररिपोर्ध्यानास्पदं चित्तजः ॥ १८ ॥

अथ स मन्मथः हैमवत्यामधित्यकायां वैयाघ्रचर्मास्तरणं देवदारुतरुवेदिकामध्यमध्यासीनं समाधियोगसमुचितावस्थानसुन्दरतराकृतिं भुजंगमोन्नद्धजटाकलापभासुरं कर्णावसक्तद्विगुणाक्षसूत्रवलयं कण्ठप्रभासंसर्गाधिकनीलां रौरवीं त्वचं दधानं नासाशिखरविन्यस्तेषत्स्तिमिताग्रताराविस्पन्दितपक्ष्ममालाक्षित्रितयमम्बुवाहमिवावृष्टिसंरम्भमपामाधारमिवानुत्तरङ्गम् अन्तरुपरुद्धप्राणानिलतया प्रदीपमिव निवातनिष्कम्पमूर्ध्वोद्भासिनीभिर्ललाटनेत्रज्वालामालाभिर्ग्लैपयन्तमिव मृणालसूत्रसुकुमारान्बालेन्दुमयूखान् निषिद्धाखिलकरणप्रचारमात्मन्येवात्मानमवलोकयन्तं भगवन्तमन्तकान्तकमद्राक्षीत् ॥

पश्यन्नन्तकशासनं मनसिजो दूराज्ज्वलन्तं त्विषा
विस्रस्तं सशरं धनुर्निजकरान्नालक्षयत्साध्वसात् ।
निर्वाणं पुनरस्य वीर्यमचिरात्संधुक्षयन्ती यथा
कान्त्या शैलसुता सखीपरिवृता तत्र स्थिताऽशोभत ॥ १९ ॥

तां सर्वावयवानवद्यवपुषं वक्षोजकिंचिन्नतां
वासो बालदिवाकरारुणरुचिश्रेयो दधानां तथा ।

सं[illegible]मानुगतैर्निवृत्तधिषणामाश्वासयन्माधवो
बन्धुः पुष्पशरस्य सान्त्ववचनैर्लोकानुसारोदितैः ॥ २९ ॥

[illegible]मानिन्याऽथ रत्याऽन्तो व्यसनस्य प्रतीक्षितः ।
संक्षीणकलया चन्द्रलेखयेव क्षपागमः ॥ ३० ॥

[illegible]कुलजलधिकौस्तुभ भोंसलवंशधराधुरंधरतुलजामहाराजकुमार-
शरभोजिमहाराजविरचिते कुमारसंभवमहाचम्पुकाव्ये
द्वितीय आश्वासः ॥



## ॥ तृतीय आश्वासः ॥

कन्दर्पं दहता हरेण सहसा भग्नस्ववाञ्छां निजं
निन्दन्तीं हृदयेन रूपविभवं स्वात्मानुरूपं पतिम् ।
वाञ्छन्तीं महते व्रताय कलितोद्योगामुवाचात्मजां
मेना तीव्रतपःश्रमाद्विरम हे पुत्रीति सौम्यं वचः ॥ १ ॥

क्व ते वपुरनीदृशश्रमपदं क्व तादृक् तपः
स्वभावकठिनं ततो विरम संभ्रमात्तापसात् ।
इति स्वजननीवचोऽप्यननुसृत्य गौरी गुरो-
रुपागमदनुज्ञया शिखरमस्य तप्तुं तपः ॥ २ ॥

अथाहार्यसमानधैर्या बालारुणारुणं वल्कलं परिदधाना नीलालकैरिव जटाकलापैरपि प्रकाशमानवदनाम्बुजा कमनीयकनककान्त्येव त्रिगुणया मौञ्ज्याप्यलंकृता अवलम्बिताक्षसूत्रपाणिः नियमनिवर्तितपुष्पशय्या केवलस्थण्डिलशायिनी हरिणाङ्गनास्वर्पितस्वदृग्विलासन्यासा निजकरकमलोपनीतैः कुम्भस्तनपयोभिः सुतानिर्विशेषं संवर्धयन्ती बालपादपानारण्यकबीजाञ्जलिदानोपलालितविस्रब्धहरिणशावा तपोनियमदिदृक्षोपयातमुनिजनाभिनन्दितचरिता उत्सृष्टपरस्परवैरसत्त्वालंकृतपावनतपोवना अनवेक्षितनिजशरीरसौकुमार्या गिरिराजकुमारी दुष्करं तपः कर्तुमुपचक्रमे ॥

प्राप्ता कन्दुकसेवनादपि यया क्लान्तिः सुतन्वा तया
पार्वत्या नियमोपवासकठिनं प्राप्तं मुनीनां व्रतम् ।
स्थित्वा वह्निचतुष्टयस्य महतो मध्ये तयाऽनन्यदृ-
ग्गत्या सम्यगवैक्ष्यतानुदिवसं भास्वाञ्जितस्वप्रभः ॥ ३ ॥

सवितृकिरणतप्तं तन्मुखं पङ्कजस्य
श्रियमभजत तस्याः पारणा वृक्षवृत्तिः ।
तपनहुतवहाभ्यां तप्तमूर्तिस्तपान्ते
क्षितिरिव नववर्षैरुक्षितोष्णं व्यमुञ्चत् ॥ ४ ॥

क्षणं स्थित्वा पक्ष्मस्वथ लघु निपीड्याधरदलं
ततो वक्षोजोर्ध्वस्थलपतनचूर्णीकृतिभृतः ।
स्खलित्वास्या रम्याकृतिवलिषु पश्चाच्च तिसृषु
प्रपन्नास्तं नाभीकुहरमथ नूत्नाम्बुपृषताः ॥ ५ ॥

सा संत्यक्तनिकेतभूमिवसतिर्निन्ये क्षपा हैमनी-
रन्योन्योज्झितयोगयोः कृतदया युग्मे रथाङ्गाह्वयोः ।
किं चाकण्ठनिमग्नमूर्तिरुदके वक्त्राम्बुजेन स्फुटं
संतानं हिमविक्षताम्बुजनुषामन्तश्चकाराम्भसाम् ॥ ६ ॥

विशीर्णपर्णवृत्तिता तपःस्थितेर्गरीयसी
यतस्तया समुज्झिता ततस्त्वपर्णिताख्यया ।

मृणालिकामृदु स्वकं शरीरकं विकर्शिनी
तपस्विभिर्दृढाङ्गकैः कृतं तपो न्यचीकरत् ॥ ७ ॥

अथाजिनवासाः ब्रह्ममयेन तेजसा ज्वलन् जटिलः मूर्तिमानिव प्रथमाश्रमः कश्चिद्द्विजवटुः पावनं गिरिजातपोवनं प्रविवेश ॥

अतिथिमुपगतं तं पूजया प्रत्युदस्था-
द्रिरिवरतनयैतत्कल्पितां सत्क्रियां सः ।
अतिथिरपि गृहीत्वा साधु विश्रम्य किंचि-
न्मृदुवचनमुवाच प्रेक्षमाणोऽद्रिकन्याम् ॥ ८ ॥

लभ्यन्ते समिधः कुशान्यपि वने निर्यत्नमप्याप्यते
स्नानार्थं सलिलं च निःश्रममपि त्वच्छक्त्यपेक्षं तपः ।
अप्यासामिह वीरुधां त्वदधरच्छायं प्रवालं नवं
त्वन्नीतोदकसंभृतं तव मनोऽप्येणेषु सप्रीतिकम् ॥ ९ ॥

मुनीनामप्येतत्तव चरितमाचार्यकपदं
त्वदीयैः सौशील्यैर्भवति परिपूतो गिरिवरः ।
अयं धर्मः सारो भवति भवती निर्विषयया
यदेकं धीवृत्त्या भजति सकलात्मानमनिशम् ॥ १० ॥

नान्यं मां प्रतिपत्तुमर्हसि यतस्त्वत्सत्कृतोऽहं बुधाः
सख्यं साप्तपदीनमाहुरधिका क्षान्तिस्तवाहं द्विजः ।

प्रष्टुं त्वां कृतनिश्चयोऽस्मि चपलः केनेप्सितेन त्वया
दुःसाधं कुलजातया सुवपुषा बाले तपस्तप्यते ॥ ११ ॥

स्यादेतत्खलु दुःसहादपि महानिष्टात्तदप्यत्र न
त्वय्यस्मन्मनसा विचारपदवीमारोढुमप्यक्षमम् ।
त्यक्तान्याभरणानि वल्कलमिदं वासो धृतं यौवने
वृद्धत्वोचितमिच्छसि त्वमथ चेत्स्वर्गं स भूमिः पितुः ॥ १२ ॥

विवोढारमिच्छस्यथालं तपोभि-
स्तव प्रार्थ्यमेतद्भविष्यत्यमोघम् ।
स्थितो यो हृदब्जे तवासौ पुरस्ता-
दुपेक्षाकरः को जटासु स्फुटासु ॥ १३ ॥

त्वामत्यन्तविकर्शितामतनुभिस्तीव्रैर्मुनीनां व्रतै-
र्लेखां चान्द्रमसीं दिवाकरकरप्लुष्टामिवोत्पश्यतः ।
चित्तं कस्य न दूयते समनसो यश्चक्षुषो गोचरः
पूर्वोपार्जितपुण्यमस्ति मम तत्पुण्यार्धभाक्त्वं भव ॥ १४ ॥

अथ तेन द्विजातिना अभिहितया तया स्वयमेव स्वमनोरथं शंसितुमशक्तया विवर्तितानञ्जनलोचनमवेक्षिता पार्श्ववर्तिनी सखी तं द्विजन्मानमित्थमाचचक्षे ॥

निबोध सुतनोरिमं द्विज मनोरथं यत्तया
तपः कठिनमास्थितं कमलकोमलाङ्ग्या भृशम् ।
चतुर्दिगधिपानपि प्रबलसंपदोऽवज्ञया
विहाय वृषवाहनं पतिमवाप्तुमिच्छत्यसौ ॥ १५ ॥

पुरा पुरारिहुंकृतिप्रभावतो निवर्तितः
शिलीमुखो वृथामुखो यदा प्रसूनधन्वनः ।
तदादि भामिनीमिमां भृशं क्षिणोति स क्रुधा
तदाप्रभृत्यसावपि गृहे पितुर्न सौख्यभाक् ॥ १६ ॥

सा शंभोश्चरितेऽत्र किंनरवधूगीते सबाष्पं स्खल-
द्वर्णं शैलकुमारिका विवृणुते शश्वन्मनोवेदनाम् ।
किं चेयं रजनीषु नेत्रयुगलं सद्यो निमील्य द्रुतं
बुद्ध्वा लक्ष्यविवर्जितं बहु वदत्यस्थानकालं वचः ॥ १७ ॥

सर्वज्ञः कथितः सदाऽसि विबुधैर्नो वेत्सि भावस्थितां
मामित्युल्लिखितो हरो हिमगिरेः पुण्योपलब्धोऽभवत् ।
सा तस्याधिगमे हरस्य न यदाऽपश्यद्विधानं तदा
कुर्वाणा विचयं परं पितृमतात्प्राप्ता तपोऽर्थं वनम् ॥ १८ ॥

तदनु स द्विजनुः कदा वा सुतनुमिमां शशिशेखरः समाश्रयिष्यत इति इङ्गितज्ञया सख्या निवेदितः अथेदमित्थमेवेत्युमामप्राक्षीत् ॥

हस्ताग्रे मुकुलीकृताङ्गुलिनि सा बिभ्रत्यथाक्षस्रजं
यत्नेनातिगरीयसा नियमतोऽवस्थाप्य वाचं जगौ ।
विप्रेदं भवता यथाश्रुतमयं वाञ्छत्यलभ्यं जनो
हेतुस्तस्य तपः किलेदमतटाः पूरा मनःसंपदाम् ॥ १९ ॥

अथ स कपटवर्णी तामिदं प्रत्युवाच
त्वदभिलषितमर्थं वेद्मि ते शूलपाणौ ।
अभिरतिरिति शीलं किं तु तस्यातिघोरं
निजमनसि विचिन्त्य त्वामहं नानुवर्ते ॥ २० ॥

त्वं तावत्सुकुमारमङ्गलतनुर्वैवाहिके मङ्गले
पाणिस्ते कमनीयकङ्कणधरश्चण्डाहिसंवेष्टितम् ।
पाणिं भूतपतेः क्षमेत कठिनं पाणिग्रहे तेन ते
वासः क्षौममिभाजिनं पशुपतेरार्द्रं स्रवच्छोणितम् ॥ २१ ॥

पादौ पल्लवकोमलौ तव पुनः केशास्थिखण्डादिभि-
र्घोरे भूतपतेर्निवासभवने स्पर्शं सहेतां कथम् ।
किं चैतत्तव दुःसहं मलयजालेपास्पदे वक्षसि
प्रातर्वैकृतभस्मलाञ्छनदृशां हास्यं सखीनां मिथः ॥ २२ ॥

एषाऽन्या च विडम्बना तव यदुद्वाहे गजारोहणे
कर्तव्ये जरठोक्षवाहनमभिष्ठास्यं तमेनं त्वया ।

साकं भूतपतिं विलोक्य सहसा स्मेराननाः सर्वतः
सावज्ञं परिहासमागतजनाः सर्वे करिष्यन्त्यपि ॥ २३ ॥

समागते पिनाकिना नव द्वयं वृथा भवे-
त्कला च चान्द्रमस्यथ त्वमप्यशेषकौमुदी ।
वपुर्विरूपनेत्रकं न दृश्यते च जन्मभू-
र्धनं दिगम्बरत्वकृत्सुदुर्लभो वरो ह्यसौ ॥ २४ ॥

निवर्तय मनस्ततः सुदति तादृशाच्छूलिनः
क्व च त्वमतिसुन्दरी क्व नु स तादृशो धूर्जटिः ।
इति द्विजनुषोदिता हिमवतः सुता विप्रियं
कृतभ्रुकुटिकम्पिताधरमवोचदेनं प्रति ॥ २५ ॥

न त्वं वेत्सि यथार्थतो द्विज हरं यस्मादिदं भाषसे
लोके मन्दधियो द्विषन्ति महतां लोकोत्तरं चेष्टितम् ।
उद्दिश्येष्टमनिष्टहानिमपि वा सेव्यं शुभं कर्म त-
न्न प्रार्थ्यं जगदीश्वरस्य महतः सच्चित्सुखैकात्मनः ॥ २६ ॥

सर्वासामपि संपदां स्मरहरो दाता जगन्नायको
याथार्थ्यं न विदन्ति तस्य महतो देवस्य सर्वे जनाः ।
अस्त्वेतस्य सुभूषणं वपुरथो नद्धाहिकृत्त्यावृतं
रम्यक्षौममथेन्दुशेखरमथो कापालिकं वाऽस्तु तत् ॥ २७ ॥

तद्भस्मातिविशुद्धमस्य वृषभो वाहोऽपि दिग्वारणा-
हंकारस्य निवारणे पटुतरो वैमानिकैः पूज्यते ।
दोषं तत्र विवक्षया स्मरहरे साधूदितं तत्त्वया
यद्देवस्य सनातनस्य जनिभूर्नास्तीति विप्रोत्तम ॥ २८ ॥

यथातथाऽस्तु वा शिवः प्रभुर्ममायमेव मे
मनः स्थिरं हरे वृथा द्विजात्र दोषवर्णनम् ।
इति ब्रुवन्त्यसौ सखीमुवाच पार्वती वटु-
र्निवार्यतामसत्कथा श्रुता हि पापकारिणी ॥ २९ ॥

गमिष्याम्यथ वा स्थानादस्मादिति चचाल सा ।
ततः स्वरूपमास्थाय तत्र संनिदधे हरः ॥ ३० ॥

आलोक्यैनं गिरीशं हिमगिरितनया वेपमानाङ्गयष्टिः
पादं सोत्क्षेप्तुकामा पथि गिरिरचितस्वोपरोधा नदीव ।
नो तस्थौ नो ययौ वा तदनु भगवता सोदिता ते तपोभिः
क्रीतो दासोऽहमस्मीत्यथ नियममसावुत्ससर्जाप्तकामा ॥ ३१ ॥

अथाद्रिकन्यका सखीं हराय संदिदेश सा
पिता ममाचलाधिपः प्रदायको नु याच्यताम् ।
इतीरिता सखी शिवं जगाद तत्तथा हरो
मुनीनचिन्तयत्तदा स सप्त तत्र तैजसान् ॥ ३२ ॥

तेऽरुन्धत्या समं द्यां निजतनुमहसां मण्डलैर्द्योतयन्तो
गङ्गास्रोतःसु कल्पद्रुमनवकुसुमोत्कीर्णवीचीभरेषु ।
दिङ्नागानां मदाम्बुस्रुतिभिरतितरां वासितेष्वाप्लुताङ्गाः
प्रादुर्भूताः पुरस्तात्सपदि पशुपतेः साक्षसूत्राः सवल्काः ॥ ३३ ॥

ते सूर्येण समीक्षिताः कृतनमस्कारं धरित्र्या समं
दंष्ट्रायामुषिता वराहवपुषः कल्पान्तकाले पुरा ।
स्रष्टुः सर्गविधेरनन्तरमलो धातार उक्ताः परे
भुञ्जानास्तपसः फलानि सकलान्यासन्पुरस्तात्प्रभोः ॥ ३४ ॥

तेषां मध्यगता पत्युः पादमूलार्पितेक्षणा ।
बभासेऽरुन्धती साक्षात्तपःसिद्धिरिवाग्रतः ॥ ३५ ॥

दारार्थं विहितादरं स्मरहरं तेऽभ्यूचुरित्थं वचो
यद्वेदाध्ययनं हुतं च विधिवद्वह्नौ कृतं यत्तपः ।
तस्येदं फलमद्य यन्मुनिजनैर्ध्येयो भवानद्य नः
स्मृत्याऽनुग्रहणेन पावयति तत्सर्वोन्नताः स्मो वयम् ॥ ३६ ॥

एषाऽनुग्रहरूपिणी तव विभो प्रीतिश्च विश्वात्मन-
स्ते वेद्या न वयं तु वेदितुमिमं शक्ताः प्रभावं तव ।
ब्रूहि त्वं भगवंस्तदद्य भवता यस्मै वयं चिन्तिताः
पूर्णाशेषसमीहितस्य भवतो नेक्षामहे काङ्क्षितम् ॥ ३७ ॥

अथ स भगवानन्तकान्तकः अतिधवलैर्दशनांशुभिर्मकुटतट-प्रतिनसुधादीधितिकान्तिमुपचिन्वंस्तान्सप्तर्षीन् प्रत्यभाषत ॥

ज्ञातं वः खलु मे कदाचिदपि नः स्वार्थाः प्रवृत्तिक्रमा
लोकार्थं हि मुनीश्वराः शृणुत मे मूर्त्यष्टकं तिष्ठति ।
तद्वैरगिकर्शितैरहमिह त्राणाय सेनापते-
रुत्पत्तिं प्रति याचितो हिमगिरिस्तद्याच्यतां पार्वतीम् ॥ ३८ ॥

कन्यार्थं वरबान्धवैः खलु हितैः कन्यापिता याच्यते
तस्माध्वाचरितं किलोपकृतये भूयादरुन्धत्यपि ।
प्रागल्भ्यं परिणीतिकर्मणि खलु स्त्रीणां श्रुतं तत्तया
सार्धं यात हिमाचलं मुनिवराः कार्यस्य संसिद्धये ॥ ३९ ॥

विवाहाभिमुखे तस्मिन् श्रेष्ठे संयमिनां शिवे ।
विवाहलज्जां महतीं तत्यजुस्ते तपोधनाः ॥ ४० ॥

अथ तेषु सप्तसु सारुन्धतीकेषु महर्षिषु ओषधिप्रस्थं प्रति प्रस्थितेषु भगवानपि चन्द्रमकुटः पूर्वोद्दिष्टमास्पदमुपजगाम ॥

ते चाकाशमथातिनीलिम समुत्प्लुत्योपजग्मुस्तदा
प्रस्थं हैमवतं मनःसमजवाः सौत्रामणादास्पदात् ।
कौबेरादपि चारु गाङ्गसलिलैः सिक्तं समन्ताज्ज्वल-
त्सिद्धौषध्यधिकोज्ज्वलन्मणिशिलाजालं पदं संपदाम् ॥ ४१ ॥

यत्र च विगतसिंहभया गजाः अश्वमुखा एव वाजिनः वनदेवता एव पौरयोषितः शिखरावलम्बिघनगर्जितान्येव मुरजध्वनयः विलोलकल्पपादपविटपा एव गृहपताकाः स्फाटिकसौधसोपानपङ्क्तिषु ज्योतिःप्रतिबिम्बितान्येव सालभञ्जिकाः ज्योतिर्लताप्रकाशमहिम्ना अनभिज्ञाततमिस्रा अभिसारिकाः यौवनान्तमेव वयः कुसुमायुध एवान्तकः रत्यन्तनिद्रैव संज्ञाविपर्ययः प्रणयकोपकम्पमानाधरोष्ठपौरपुरन्ध्रीभ्रूलताहेतिदर्शनसंत्रासैराप्रसादसमयं कृतपादप्रणिपाता एव प्रेयसः संतानकतरुच्छायोपसुप्तविद्याधरमिथुनं गन्धमादनतलमेव बाह्योपवनमिति अवाङ्मनसगोचरो महिमातिशयः ॥

तत्कालं मुनयः पदं हिमवतो वीक्ष्यास्पदं संपदां
स्वर्गेप्सासुकृतं विडम्बनमिव स्मेरानना मेनिरे ।
आकाशादवतेरुरप्यथ पदं प्राप्ता हिमाद्रेरिमे
रेजुर्भास्वरमूर्तयो दिनकराः प्राप्ता इवोर्वीतलम् ॥ ४२ ॥

तानर्घ्यानथ तापसान्गिरिवरः प्रत्युद्ययौ पूजया
पाद्यार्घ्यादिकया भुवं विनमयन्पादक्रमोपक्रमैः ।
प्रांशुर्धातुरजोऽरुणाधरदलः कल्पद्रुबाहुर्महा-
शृङ्गोरस्कवपुर्हिमक्षितिधरः सुव्यक्तरूपो यथा ॥ ४३ ॥

अथ गिरिपतिरेतानागतानात्मगेहं
विहितमुनिजनार्हस्वासनान्प्रत्युवाच ।

अजलदमिव वर्षं निष्प्रसूनं फलं वा-
ऽननुमितमुपपन्नं दर्शनं वो विभाति ॥ ४४ ॥

मृदं वृक्षमिवायसं कनकवद्भूमेरिव द्यां गतं
मन्ये मां भवतामनुग्रहवशात्संपन्नसर्वेप्सितम् ।
स्थानानामुपगम्यतामुपगतोऽस्म्यद्यप्रभृत्यात्मनां
शुद्ध्यर्थं यदधिष्ठितं सुकृतिभिस्तत्तीर्थमाचक्षते ॥ ४५ ॥

भवदङ्घ्रिविशुद्धवारिणा मम मूर्धन्यपि गाङ्गपाथसा ।
परिपूतनमोऽस्मि वीक्षणाद्भवतां पादसमर्पणात्तथा ॥ ४६ ॥

भवत्समागमोद्भवा मुदो न मान्ति मे तनौ
विशालतायुतोन्नतावपि प्रभाववत्तमाः ।
न केवलं दरीस्थितं तमो विनुन्नमान्तरं
तमोऽपि मे भवत्प्रभासमूहसूर्यकोटिभिः ॥ ४७ ॥

किं प्राप्यं भवतां भविष्यति जनादस्मात्समस्ताशिषां
दातॄणामपि पावनाय भवतामत्रागमः सांप्रतम् ।
एवं यद्यपि किं तु तत्र भवतामाज्ञापनानुग्रहा-
द्धन्यः स्यां सकुटुम्बकोऽहमिति मे वाञ्छानुगृह्णीत माम् ॥ ४८ ॥

इत्युक्तमर्थं गिरिणा दरीभ्यः समुद्गतेन प्रतिशब्दितेन ।
तस्यापरा स्थावररूपिणी च मूर्तिर्जगाद द्विरिव प्रहृष्टा ॥ ४९ ॥

तदनु मुनिवरास्ते चोदयामासुरुक्ति-
प्रतिवचनविधासु श्लाघनीयप्रशस्तिम् ।
विदितसकलतत्त्वं चाङ्गिरःसंज्ञमुच्चै-
रयमपि गिरिराजं प्रत्युवाच प्रहृष्टः ॥ ५० ॥

औन्नत्ये गिरिराज तावकमनः शृङ्गैः समानं तव
त्वन्मूर्तिं मुनयो वदन्ति सकलाधारां परां वैष्णवीम् ।
नालम्बिष्यत चेद्भवान्भुवमिमां शेषो मृणालोपमैः
साहस्रैरपि मूर्धभिश्चिरममूं नाधास्यत प्रायशः ॥ ५१ ॥

त्वदुत्पन्ना नद्यो गिरिवर यथा सर्वभुवनं
पुनन्त्येवं श्लाघ्याः सकलगुणसंपत्समुदिताः ।
यशोधुन्यो धन्यास्तव तु महिमव्याप्तिरयते
परां पुण्यां विष्णोः सकलभुवनव्याप्त्युपमितिम् ॥ ५२ ॥

मध्ये यज्ञभुजां त्वमस्यतिगुरुः पूजासु पूज्यात्मनां
हेतुस्ते वपुरेतदत्रभवतः किं ब्रूमहे वैभवम् ।
कार्यं नः शृणु शोभनं तु तव तत्सर्वात्मकः शंकरः
पुत्रीं ते परिणेतुमिच्छति तव प्रार्थ्यं स्वतो मन्यताम् ॥ ५३ ॥

वाचेवार्थममुं महेश्वरमपि त्वं युङ्क्ष्व पुत्र्याऽऽत्मनः
लोके सद्वरसात्कृता पितृमती कन्याऽभिनन्द्या ननु ।

१८

यानि स्थावरजङ्गमानि भुवने तावन्त्युमाशंकरौ
पूज्यौ सर्वशिवंकरौ स्वपितरौ पश्यन्तु सर्वात्मकौ ॥ ५१

प्रणम्रससुरासुरस्फुरितमौलिरत्नप्रभा-
पिशङ्गितपदाम्बुजौ प्रभवतामुमाशंकरौ ।
वधूरियमसौ शिवो वरतमो वरोऽमी वयं
तयोः परिणयार्थिनः समुदिताः समस्ता गुणाः ॥ ५५ ॥

वदिक्रियाकर्मण एव शंभोः सुता विवाहोदितमङ्गलेन ।
जगद्गुरोस्तस्य गुरुर्भव त्वं गिरे गरीयान् खलु ते प्रभावः ॥ ५

मुनाविति वदत्यसौ नतमुखी पितुः पार्श्वगा
विलासकमले दलान्यजगणत्सलज्जस्मितम् ।
उमा हिममहीधरोऽप्ययमुदैक्षतात्मप्रिया-
मुखं खलु कुटुम्बिनां प्रकृतयः कलत्राश्रयाः ॥ ५७ ॥

अथैवमत्रोचितमिति विचार्य निश्चितधिया पित्रा हिम 'वत्से विश्वात्मने परमेश्वराय त्वं संकल्पिता गृहमेधिफलं च प्राप्तम्' इति ससंतोषमभिहिता गौरी कृतागमनकार्यान् तान् सह सविनयलज्जास्मितविलासं प्रणनाम ॥

समीहितसमर्थनप्रगुणितादरं तद्वचो
गिरेर्मुनिपरंपरा समभिनन्द्य तं भूयसा ।

समैधयद्यथाशिषां फलमुखेन वादेन ता-
मुमां सहचरी मुनेरपि निजाङ्कमारोपयत् ॥ ५८ ॥

मेनां सानुनयैर्वचोभिरुचितैः साऽरुन्धती सस्मितं
जामाता भविता हरस्तव समा काऽन्या त्रिलोक्यां भवेत् ।
इत्याश्वासितमानसा समतनोद्वैवाहिकं वासरं
चाख्याय त्रिदिनात्परं मुनिवराः प्रापुः पुनः शंकरम् ॥ ५९ ॥

तेऽस्मै तत्सिद्धमर्थं सविनयमुपगम्योचिवांसो विसृष्टाः
संतुष्टेनेश्वरेण प्रकृतशुभविधावुत्सुका धामवापुः ।
ईशोऽप्येतान्यहानि प्रगुणितसुमनःकल्पकल्पान्यनैषीत्
कृच्छ्रादेवान्यमस्मात्कथमिव विवशं कुर्वतेऽमी न भावाः ॥ ६० ॥

इति श्रीभोसलकुलजलधिकौस्तुभचोलवसुंधराधुरंधरतुलजमहाराजकुमार-
शरभोजिमहाराजविरचिते कुमारसंभवमहाचम्पुकाव्ये
तृतीय आश्वासः ॥



## चतुर्थ आश्वासः

अथौषधिपतौ तदा शपदि वर्धमाने तिथौ
सुशोभनगुणस्पृहि स्वहितबन्धुभिः संयुतः ।
हिमाद्रिरकरोन्मुदा स्वदुहितुर्विवाहोदय-
प्रकारविधिमञ्जसा सकललोकसौख्यप्रदम् ॥ १ ॥

तत्कालं प्रतिसद्म कौतुकितया वैवाहिके मङ्गले
व्यग्राशेषपुरंध्रिवर्गमभवत्सान्तःपुरं तत्पुरम् ।
भास्वत्काञ्चनतोरणं प्रविलसत्सौवर्णपट्टध्वजं
संतानादिसमस्तदिव्यकुसुमैराकीर्णवीथीपथम् ॥ २ ॥

अपत्यभूम्नि सत्यपि प्रगल्भशीलसंपदा
पितुर्बभूव पार्वती सुधेव दृष्टिरञ्जनी ।
सपुत्रभर्तृसंपदः स्वबन्धुयोषितस्तु तां
सुलग्नतारवासरे प्रचक्रिरे शुभक्रियाम् ॥ ३ ॥

अभ्यङ्गादिविवाहमङ्गलविधिं चक्रुः स्वबन्धुस्त्रियः
पार्वत्या मृदुलोध्रकल्कमिलितस्नानीयचूर्णादिभिः ।
क्लृप्तालेपविधिं चतुष्कसदने वैडूर्यपीठे स्थितां
तामष्टापदकुम्भसंभृतजलैः स्नातामकुर्वन्मुदा ॥ ४ ॥

सैवं मङ्गलतूर्यनादरुचिरं स्नाता गृहीतामल-
क्षौमा वीतजलोदयेव वसुधा संफुल्लकाशा बभौ ।
निन्ये कौतुकवेदिकामथ मणिस्तम्भान्वितां मौक्तिक-
स्रङ्नद्धां सवितानकां गिरिसुता स्त्रीभिः सतूर्यस्वनाम् ॥ ५ ॥

तत्र प्राग्वदनां गिरीन्द्रतनयां कृत्वा क्षणं योषितो
भूषार्थं विललम्बिरे तदनु तामाबद्धकेशस्रजम् ।
सर्वाङ्गीणपरिष्क्रियासुललितामादर्शवीक्षोदित-
श्लाघामुन्नमिताननामकृत तन्माता सलज्जां तदा ॥ ६ ॥

मेना तां प्रणमय्य दैवतगणान्स्वान्कार्यदक्षा ततः
साध्वीनां पदवन्दनं च कलयामास स्वयं स्वां सुताम् ।
प्रेमाखण्डितमस्तु भर्तुरिति तत्क्लृप्ताशिषो भूयसी-
रर्धांशग्रहणात्स्वभर्तुरकरोत्पश्चात्तनीः पार्वती ॥ ७ ॥

अथ स तुषाराचलः स्वेच्छाविभूत्यनुगुणं तस्याः स्वसुतायाः कर्तव्यं कौतुकमङ्गलविधिमनुष्ठाय ससुहृज्जनायां संनिधापितसकलविवाहमङ्गलोपकरणायां सभायां वृषभध्वजागमनं प्रतीक्षमाणोऽवतस्थे ॥

ततः पुरभिदोऽपि तत्कुतुकमङ्गलायोचितं
प्रसाधनमुपाकृतं सकलमातृकाभिः स्वयम् ।

अगृह्यत हरेण तद्रचितमण्डनं गौरवा-
त्परं प्रथमभूषणं परिणतं वरस्योचितम् ॥ ८ ॥

शंभोरासीद्धसितमखिलं स्वाङ्गरागः कपालं
जातं कल्पप्रसवमृदुलं शेखरं सर्वमेव ।
क्षौमं वस्त्रद्वितयमभवच्चर्म वैयाघ्रमैभं
तार्तीयीकं तिलकितमभून्नेत्रमर्चिःकणोग्रम् ॥ ९ ॥

यथाप्रदेशसंगता भुजंगमा विभूषणी-
बभूवुरेष नूत्नताशरीरमात्रगोचरा ।
फणामणिप्रभा तु या पुरा बभूव सैव सा
शिरःस्थितो विधुः परं कुतोऽभवन्न नूतनः ॥ १० ॥

साधारणे सति महेशसमाश्रयेऽपि
भस्मेन्दुचर्मभुजगेषु विधुं विहाय ।
भस्माजिनादि पररूपमवाप नेन्दु-
रन्तःस्थिता मलिनता किमु तत्र हेतुः ॥ ११ ॥

तदनु भुवनगोप्ता नन्दिहस्तावलम्बी
रुचिरतरमहोक्षं व्याघ्रचर्मावृताङ्गम् ।
निजपरिबृढभक्तिप्रह्वितोच्चैःप्रमाणं
चरमिव रजताद्रिं शीघ्रमारुह्य यातः ॥ १२ ॥

गन्धर्वैः साप्सरोभिर्मुनिवरविहिताः स्वाशिषः शुश्रुवान्स-
न्प्रोचे प्रागेव यूयं परिणयविषये मद्वृताध्वर्युभावाः ॥ १६

अध्वानं स विलङ्घ्य सध्वनिचलत्सौवर्णघण्टावली-
ग्रीवालंकरणः सलीलमृषभश्रेष्ठो घनेषु स्खलन् ।
धून्वञ्शृङ्गयुगं हिमाचलपुरं दुष्प्रापमन्यैः क्षणा-
त्प्रातस्त्र्यक्षकटाक्षरश्मिभिरिवोत्कृष्टः पुरोयायिभिः ॥ १७ ।

तदनु मदनहन्ता पौरलोकेन दृष्टः
सपदि कुतुकभाजा स्वोन्मुखेनावतीर्य ।
वृषपरिवृढपृष्ठादद्रिशृङ्गादिवार्को
भवनमचलनेतुः प्राप्तवानाप्तकामः ॥ १८ ॥

प्रत्युद्गम्य समृद्धबन्धुनिवहारूढैर्गजेन्द्रैः समं
फुल्लानोकहजालकैरिव महाप्रस्थैस्तुषाराचलः ।
देवेनाखिललोकवन्दितपदद्वन्द्वेन क्लृप्तानति-
र्गीर्वाणैर्वरबन्धुभिः सह निजं वेश्ममाययौ स्वैरपि ॥ १९ ॥

सपुष्पवृष्टिवीथिकं सतूर्यघोषगीतिकं
पुरः सरोवरस्य सन्धराधरस्तुतोष सः ।
दिदृक्षवः पुराङ्गना महोक्षवाहमागतं
गवाक्षमार्गतस्तदा समुन्नतान्गृहान्गताः ॥ २० ॥

विहाय सदनक्रियाः सपदि शंभुवीक्षाशया
कयाचिदलकोत्करो गलितपुष्पमालोऽपि सन् ।
अबध्यत न पाणिना करधृताग्रपादां परां
प्रसाधनकरीं हठात्प्रतिनिषिध्य मुग्धाङ्गनाम् ॥ २१ ॥

लीलामन्दगतिं विहाय सहसा सद्यः कृतालक्तकौ
पादौ वर्त्मनि विक्षिपन्त्यतनुत क्षोणीं च सालक्तकाम् ।
एका दक्षिणमञ्जनेन नयनं संभाव्य वातायनं
प्राप्ता वामविलोचनाऽञ्जनमकृत्वैव क्षणेनापरा ॥ २२ ॥

अन्या गवाक्षकृतदृष्टिरतर्कितोत्था
विस्रस्तनीवि दधती वसनं करेण ।
एकोत्थिता त्वरितमक्रमदत्तपादा
काञ्चीं वहन्त्यनुपदं गलितां करेण ॥ २३ ॥

किरीटेन्दुज्योत्स्नाद्विगुणितसुधाकान्तिविमलां
वितन्वन्प्रासादावलिमतिविचित्रध्वजपटाम् ।
स्फुरन्मुक्ताजालोद्ग्रथितविचलत्तोरणपथं
प्रपेदे शंभुस्तद्गिरिपतिसुगुप्तं पुरवरम् ॥ २४ ॥

पश्यन्तीनां नयनसुभगं योषितां नागरीणां
शंभुं नासीन्नयनयुगलीतृप्तिरित्येतदास्ताम् ।

सर्वा ह्यासां करणसरणिः प्राप जाड्यं विनिद्रा
स्थाने तत्तं यदिदमुमया याऽङ्कशय्या भवित्री ॥ २५ ॥

क्रोधादधाक्षीत्कुसुमायुधाङ्गं न हीश्वरः किं तु मनोभवोऽमुम् ।
अनन्यसाधारणरूपमीशं पश्यन्ह्रिया न्यस्तशरीर एव ॥ २६ ॥

अनन्यलभ्यमीशानं प्राप्य जामातरं गिरिः ।
उच्चैस्तरां स्वमूर्धानं वक्ष्यति स्वयमुन्नतम् ॥ २७ ॥

अथेत्थमोषधिप्रस्थविलासिनीनां कुतूहलकथा उपशृण्वन् केयूर चूर्णलाजमुष्टिरच्युतदत्तहस्तावलम्बः पर्वतराजभवनस्य कानिचित्कक्ष्या न्तराण्यतीत्य समग्राऽलंकरणोपकरणां विवाहमङ्गलवेदिकां प्रविवेश ॥

तदनु सकलदेवाः साद्रयो बन्धुवर्गाः
परमऋषिसमूहा नन्दिमुख्या गणाश्च ।
पुरहरवृतपूर्वाः सप्त दिव्या मुनीन्द्राः
कनककलशपूर्णां वेदिकामन्ववात्सुः ॥ २८ ॥

विधिवददिशदस्मै विष्टराघ्यादिसर्वं
सपदि समधुपर्कं शंभवे सोऽद्रिनाथः ।
अथ शशधरचूडश्चोपनिन्ये समक्षं
गिरिदुहितुरधीशैः कन्यकान्तःपुरस्य ॥ २९ ॥

देवोऽयं द्विदुकूलसंवृततनुर्नीतो वधूं फेनिलो
वेलां वार्धिरिव व्यभारप्रगुणितः स्वीयाननेन्दुश्रिया ।
देव्योत्फुल्लविलोचनौघकुमुदः संसृज्यमानस्तदा
लोकोऽयं शरदेव निर्मलतमः स्वान्तोदको दिद्युते ॥ ३० ॥

तयोरन्योन्यलोलानि कातराणि समागमे ।
हृद्यां ह्रीयन्त्रणां प्रापुर्लोचनानि सभान्तरे ॥ ३१ ॥

पार्वत्याः करमद्रिणाऽथ गुरुणा दत्तं सदानोदकं
जग्राहेन्दुकलाधरो गिरिसुतारूपेण गूढात्मनः ।
पुष्पेषोरिव नूत्नमङ्कुरमथो रोमाञ्चिताऽभूदुमा
शंभुः स्विन्नकराङ्गुलिर्मनसिजस्ताभ्यां समं व्यञ्जितः ॥ ३२ ॥

प्रदक्षिणकृतेरिदं मिथुनमाश्यमग्नेर्बभौ
सुमेरुसविधे मिथः सुघटितं यथाहःक्षपम् ।
परस्परकरस्पृशौ मुकुलिताक्षि तौ दंपती
वधूमथ पुरोहितो विहितलाजहोमां व्यधात् ॥ ३३ ॥

लाजधूमकृतगन्धमाननं बिभ्रती गिरिवरात्मजा बभौ ।
षट्पदोपहृतलोध्रवासनं पद्मिनीव शरदम्बुजं तदा ॥ ३४ ॥

वत्से वह्निस्तव परिणये साक्षिभावं प्रपन्नो
भर्त्रा सार्धं भव सहचरी धर्मचर्यां कुरुष्व ।

इत्यादिष्टं गुरुजनवचः प्रत्यगृह्लाद्भवानी
वर्षारम्भोद्गतमिव पयश्चातकी जातहर्षा ॥ ३५ ॥

सारुन्धतीकध्रुवदर्शनाथ प्रयोज्यमानाथ गिरीन्द्रकन्या ।
दृष्टं मयेत्याननमुन्नमय्य ह्रीसंनताङ्गी कथमप्युवाच ॥ ३६ ॥

इत्थं पुरोधसा वेधसा यथाविध्यनुष्ठापितसर्वविवाहमङ्गलविधानौ तावादिमौ जगन्मातापितरौ दम्पती पुरोहितासनस्थिताय विधात्रे प्रणेमतुः ॥

वीरसूर्भव कल्याणीत्याशिषो विधिनोदिताः ।
वाचस्पतिर्गिरीशस्य तस्थावाशास्यचिन्तया ॥ ३७ ॥

सौवर्णवेदिकायां तौ रत्नासनमधिष्ठितौ ।
मङ्गलार्द्राक्षतारोपमन्वभूतां वधूवरौ ॥ ३८ ॥

लक्ष्मीः पत्रान्तलम्बि प्रचुरजलपृषन्मौक्तिकं नालदण्डं
जायापत्योः स्वहस्तस्थितकमलमुपर्यातपत्रं व्यधत्त ।
वाणयप्येतौ समस्तागमशिखरवचोजातगीतावनावी-
द्गन्धर्वोद्गीतिरम्यं ननृतुरपि तदा देवतावारनार्यः ॥ ३९ ॥

तदा दिविषदो हरं कृतपरिग्रहं सादरं
कृताञ्जलिपुटा मुहुश्चरणयोर्निपत्याञ्जसा ।

अयाचिषत सेवनं पुनरुपात्तमूर्तेस्ततः
प्रसूनधनुषो हरोऽप्यमुममंस्त कार्योचितम् ॥ ४० ॥

तदनु स विधुमौलिस्तान्विसृज्यामर्षी-
न्सपदि सह भवान्या केलिगेहं जगाहे ।
विनमितवदनाब्जां लज्जया तत्र गौरीं
रुचिरनवविलासैः सस्मितामाततान ॥ ४१ ॥

सा पाणिग्रहणादनन्तरमुमा शंभुं प्रति व्रीडया
भावेनापि ससाध्वसेन सहिता रम्याकृतिः कामतः ।
उक्ताऽप्यप्रतिवाग्धृताऽपि वसने गन्तुं कृतेच्छा द्रुतं
शय्यां नाश्रयदन्यतः कृतमुखी रत्यै तथापीशितुः ॥ ४२ ॥

सपदि कपटनिद्रामीलिते शंभुनेत्रे
हिमगिरितनया तत्कैतवाज्ञा तदानीम् ।
अकृत वदनमारात्संमुखं तस्य ताव-
द्विकसति हरनेत्रेऽमीलयत्स्वस्य चक्षुः ॥ ४३ ॥

निजनाभिदेशनिहतस्तु शांभवो धरणीधरेन्द्रसुतया सकम्पया ।
रुरुधे तदोच्छ्वसितनीविबन्धनं वसनं बभूव गिरिराजजन्मनः ॥

एकान्ते निगृहीतसाध्वसमुमादिष्टा शिवः सेव्यता-
मित्यालीभिरपि प्रिये सति समायाते न तस्यास्मरत् ।

ईशेनापहृतांशुका करतलद्वन्द्वेन नेत्रद्वयं
रुद्ध्वाऽप्यस्य तृतीयमक्षि विशदं दृष्ट्वा निरर्थश्रमा ॥ ४५ ॥

रात्रौ वृत्तं निजसहचरीः पृच्छतीरद्रिकन्या
नैवाकार्षीदवगतकथा लज्जयाऽधोमुखी सा ।
आदर्शे स्वां तनुमकलितप्रावृतिं प्रेक्षमाणा
पाश्चात्यस्य प्रतिफलितमालोक्य भर्तुर्ललज्जे ॥ ४६ ॥

पत्यौ वाल्लभ्यमस्या हिमगिरिदुहितुर्मेनकायाः स्वमातुः
प्रत्यास्यच्चित्तपीडां किल दुहितृजनस्तादृशो मातृतुष्ट्यै ।
एवं कालक्रमेणावगतरतिसुखा सा बभूवानयोस्त-
त्प्रेमान्योन्यं द्रढीयः सुरसरिदुदधिप्रीतिमप्यत्यशेत ॥ ४७ ॥

एवं तत्र हिमाचले पुरहरो मासं न्यवात्सीत्सुखं
पश्चात्तं श्वशुरं हिमाद्रिमनुमन्त्र्यैवान्यतः सोऽवसत् ।
कौबेराचलकम्पनोद्यतकरव्यापाररक्षोधिप-
ध्वानोद्भीतहिमाद्रिजाकृतपरिष्वङ्गोऽन्वभून्निर्वृतिम् ॥ ४८ ॥

मलयगिरिसमीरो धूतपाटीरवृक्ष-
प्रसरदमितगन्धः सिन्धुसंपर्कशीतः ।
सुरतविरतिजातां क्लान्तिमीशानगौर्यो-
रहरदथ सुमेरौ तौ सुखान्यन्वभूताम् ॥ ४९ ॥

स्वर्गङ्गातोयकेलिप्रभृति नवनवस्मारलीला विधाय
क्षोणीसौख्यान्यवाप्तुं विपिनमभजतां तौ महापर्वतानाम् ।
तत्रोचे शैलकन्यां पुररिपुरखिलांस्तत्प्रदेशान्प्रदर्श्य
प्रेयस्येतौ दिनान्ते विघटनसभयौ क्रन्दतश्चक्रवाकौ ॥ ५० ॥

अमी समदद्न्तिनः सरसि सल्लकीभञ्जन-
प्रवासितमितो जलं कमलगन्धि संगृह्णते ।
इमे च वनपल्वलं निबिडपङ्ककल्कोदकं
विगाह्य शमितातपाः किरय उत्तरन्त्यम्भसः ॥ ५१ ॥

पश्यैते प्रविशन्मृगाजिरतलामूलोपसिक्तद्रुमा
धूमोन्नेयहुताग्निहोत्रसमया भान्त्याश्रमाः सर्वतः ।
भानुं सामगणैः स्तुवन्ति मुनयो रथ्याश्वहृष्यस्वरै-
र्यातेऽस्तं सवितर्यसावपि शनैः सन्ध्याऽनुयातीव तम् ॥ ५२ ॥

अस्पृष्टभूमिसमुदञ्चितपार्ष्णिभागा
ब्रह्माभिमन्त्र्य कलिताञ्जलिवारिहस्ताः ।
एते द्विजा विधिवदुन्मुखमीक्षमाणा
भास्वन्तमर्घ्यविधिना परिपूजयन्ति ॥ ५३ ॥

तस्मात्त्वं मां मुहूर्तं शशिमुखि समनुज्ञातुमर्हस्यमूस्ते
सख्योऽभिज्ञा विनोदे नियमविधिमहं चोचितं कर्तुमीहे ।

इत्युक्त्वा सोऽन्वतिष्ठन्नियममथ सखीमाललापाद्रिकन्या
सन्ध्यामीशोऽपि तावन्नमति किमधिका सेति कोपं चकार ॥

विमुञ्च कोपमञ्चतस्त्वदीयमूर्त्तिमेव मे
न वञ्चनास्ति काचन प्रपञ्चरीतिरीदृशी ।
दृगञ्चलेन पश्य मां विरिञ्चिविष्णुसेविते
न सन्तु पञ्चबाणतो व्यथा ममाद्य किंचन ॥ ५५ ॥

यानेऽस्तं सह सन्ध्यया दिनकरे सद्यश्चकोराङ्गना
शोकाग्निज्वलनात्पुरः समुदितैर्धूमैरिवाभ्रंलिहैः ।
आसीत्संतमसैर्नभःस्थलमभिव्याप्तं तथोद्वेष्यतः
शीतांशोः पृषतैरिवोडुनिकरैः प्रादुर्बभूवे दिवि ॥ ५६ ॥

अयं हिमकरः करैस्तिमिरकेशपाशं द्रुतं
निगृह्य रजनीमुखं मुकुलिताब्जनेत्राञ्चलम् ।
चलद्रुचिरतारकं कुमुदचारुमन्दस्मितं
लसद्विरुतसीत्कृतं हरिणलोचने चुम्बति ॥ ५७ ॥

सुमुखि शशिमयूखैर्भिन्नतामिस्रमभ्रं
गजलुलितमिवाम्भः सारसं संप्रसीदत् ।
अयमपि शशलक्ष्मा त्यक्तरक्तस्वभावो
भवति विशदमूर्तिर्न स्थिरस्तद्विकारः ॥ ५८ ॥

किं चेन्दुप्रभयोन्नते स्थितमभून्निम्नाश्रयं शार्वरं
सद्यः प्रस्रवदिन्दुकान्तसलिलैः शैलः स्वसानुद्रुषु ।
निद्रालून् शिखिनः करोति विगतस्नापानकाले करै-
श्चन्द्रः कल्पलतासुमानि गणयत्यानेतुमिच्छन्निव ॥ ५९ ॥

शशिमुखि तव चन्द्रश्चन्द्रिकापुष्पदाम्ना
कलयितुमिव केशान्नूनमभ्याशमेति ।
इयमपि मधुपात्रं बिभ्रती कल्पवल्ली
निजकुसुममिह त्वत्पूजनार्थोद्यतेव ॥ ६० ॥

तदनु मदनवृद्ध्यै पाययामास पौष्पं
मधु मधुरमुमां तामुत्तमो देवतानाम् ।
अथ गिरिवरजाता शूलपाणेर्मदेद्धा
सकलभुवनवन्द्या वश्यतामाजगाम ॥ ६१ ॥

अथ त्रिपुरभञ्जकृत्सपदि शैलराजात्मजां
करेण परिगृह्य तां प्रतिविवेश लीलागृहम् ।
स तत्र सहितस्तया प्रतिदिनं विलासं रहो
नवं नवमिवाकरोदुपगताखिलाशीरपि ॥ ६२ ॥

ब्रह्मादीनां सुराणामपि निजचरणप्रेक्षणापेक्षिणां तं
कालं दृश्येतरः सन्हिमगिरितनयावल्लभो दुर्लभोऽन्यैः ।

क्रीडत्येकां त्रियामामिव दिवसगणानत्यनैषीत्सुखात्मा
सर्वेषां विष्टपानामपि सकलसुखप्राप्तये मङ्गलाय ॥ ६३ ॥

सर्वे लेखाः सपदि गिरिजाशंकरौ दीर्घकालं
तावन्योन्यं प्रकटितसुखौ संगतौ नित्यतृप्तौ ।
ध्यात्वा सेनापतिजनिकृते तुष्टुवुर्वेदवाग्भि-
र्देवोऽप्येनांस्त्रिपुरदमनः प्रोचिवान्वाचमेवम् ॥ ६४ ॥

हे देवाः काङ्क्षितं वः सुचिरमिदमतः संप्रसन्नः करिष्ये
युष्माकं काममेतं सफलमिह भवत्काङ्क्षिते को विलम्बः ।
मद्वीर्यं भूतधात्री वहतु भवतु वः कार्यमित्युक्तिमैशीं
श्रुत्वाऽनुज्ञातवन्तास्त्रिदशपरिवृढाः वीर्यधृत्यै धरित्रीम् ॥ ६५ ॥

ततोऽम्बिकाऽतिकुपिता शशाप सुखविघ्नतः ।
स्वस्त्रीष्वप्रजसो देवान्भुवं चानेकभर्तृकाम् ॥ ६६ ॥

यातेषु त्रिदशेषु शांभवमभूत्तेजः सहस्रार्कभं
तत्तेजः प्रथमं दधार धरणी गङ्गा ततोऽतःपरम् ।
उद्यत्कोटिरविप्रभः शरवणे जातः कुमारो मुखैः
षड्भिर्द्वादशभिर्भुजैश्च नयनैस्तादृग्विधैरद्भुतः ॥ ६७ ॥

तं कृत्तिकाः षडपि षण्मुखमात्मपुत्रं
स्तन्यार्पणेन विदधुस्तत एव योगात् ।

षाण्मातुरः समभवद्भुवनस्य गोप्ता
तेनाननन्दतुरुभौ गिरिजागिरीशौ ॥ ६८ ॥

तं सेनान्यमभीप्सवो दिविषदः शक्रादयः शंकरं
नत्वा साम्बमथोचुरीश्वर भवत्पाल्या वयं सर्वतः ।
अद्यासौ किल तारकः सुररिपुर्लोकाङ्क्षिणोत्यन्वहं
तं हन्तुं न परः प्रभुस्तव सुतात्सेनापतिः सोऽस्तु नः ॥ ६९ ॥

एवं प्रार्थयतः सुरान्पुरहरः प्रत्यूचिवानग्रणी-
र्युष्माकं भविता हनिष्यति भवत्प्रत्यर्थिनः षण्मुखः ।
इत्युक्तास्त्रिदशाः पिनाकधनुषा सेनापतिं तं तदा
कृत्वाग्रे सहसासुरैः सह बलैर्योद्धुं प्रतस्थुर्द्रुतम् ॥ ७० ॥

सेना व्यूह्याथ सेनापतिरपि सकलाः कार्तिकेयश्चतुर्धा
वह्न्याद्यैरग्रणीभिर्वसुमुखमरुदादित्यरुद्राभिधानाम् ।
धावन्मातङ्गघण्टाघणघणरणितत्रासंसंजातमूर्च्छं
चित्तन्यस्तं वितन्वन्नसुरपुरवरं संननाहोग्रमूर्तिः ॥ ७१ ॥

तस्मिन्काले समस्तासुरवरसहितस्तारको मन्त्रिमुख्यैः
साकं संमन्त्र्य योद्धुं व्यवसितधिषणो दैत्यसेनापतींस्तान् ।
अभ्यूचे प्राप्तकालं ननु विदितमिदं दैत्यसेनाग्रगण्याः
सेनान्यं कार्तिकेयं पुरहरकृपया प्राप्य देवाः प्रहृष्टाः ॥ ७२ ॥

तद्युष्माभिरतिप्रचण्डचरितैरप्यत्र काले मुहुः
संनद्धैर्भवितव्यमत्र भवतां वक्तव्यमेतत्किमु ।
इत्येतत्प्रतिनन्द्य तारकवचो दैत्यास्तदा प्रस्थिता
योद्धुं कल्पितनिश्चयाः सुरबलैः साकं समस्तैरपि ॥ ७३ ॥

उत्प्लुत्योत्प्लुत्य वल्गत्तुरगखुररजोधूमधूम्रान्तरिक्षं
माद्यन्मातङ्गघण्टामणिनिकरघणात्कारवाचाटिताशम् ।
उच्चैः संपातधावद्रथरथिकविमुक्ताशुगाच्छादिताभ्रं
पादातोद्धूतशस्त्रं सुरदितिजनुषां युद्धमन्योन्यमासीत् ॥ ७४ ॥

नेदं नन्दनकाननं विशसनं नेताः सुपर्वाङ्गना-
स्तीक्ष्णाः शस्त्रपरंपराः समुदिताः प्रत्यर्थिमर्मच्छिदः ।
नैतत्सत्रमसृग्वसान्त्रनिकरक्रूरं महायोधनं
नायं गौतमदारजारचरितो नेताऽसुरस्तारकः ॥ ७५ ॥

अग्नेऽन्नं वह वाहि वात विपिने पर्जन्य गर्जाम्बरे
मृत्यो मर्त्यजनेषु गच्छ धनप त्वं कोशगेहे वस ।
वस्वादित्यगणा भवन्ति भवतां श्राद्धक्रियासु क्षमा
नो युद्धेष्विति सैनिका दितिभुवां देवानवामंसत ॥ ७६ ॥

अथेत्थमवजानतो सुरसैनिकान् निःशङ्कं प्रहरतेति सेनापतिना भवता षडाननेन चोदिताः सुपर्वसैनिकाः आसुरं नासीरमवगाह्य असुरसङ्घैः सह योद्धुमारेभिरे ॥

अग्नावुद्विग्नचित्ते मरुति विमुखिते यातुधानेऽतिडूने
पर्जन्ये जन्यभीते सपदि धनपतावुन्मतौ वज्रहस्ते ।
चित्रन्यस्ते यथोच्चैः शरनिकरसमुत्कृत्तदैत्येन्द्रशीर्षं
चक्रे दैतेयसैन्यं विशकलितमथो कार्तिकेयः क्षणेन ॥ ७७ ॥

तदनु दिविषदस्ते चन्द्रचूडप्रसादा-
त्सपदि विजितदैत्याः कार्तिकेयं प्रणम्य ।
निजनगरमवापुः सर्षिसङ्घाश्च लोका
विगतसकलपीडाः सौख्यवन्तो बभूवुः ॥ ७८ ॥

मातर्वाणि नमस्करोमि चरणद्वन्द्वाम्बुजं तावकं
क्षन्तव्या किल बालकेन रचिता मात्राऽऽगसां संततिः ।
यन्मेऽत्र स्खलितं मया यदपि वोत्सृष्टं स्वरागौरवा-
त्तत्सर्वं मम साहसं भगवति क्षान्त्वा प्रसन्ना भव ॥ ७९ ॥

इति श्रीभोसलकुलजलधिकौस्तुभचोलवसुंधराधुरंधरतुलजमहाराजकुमार-
शरभोजिमहाराजविरचिते कुमारसंभवमहाचम्पुकाव्ये
चतुर्थ आश्वासः ॥

॥ संपूर्णोऽयं ग्रन्थः ॥



# ॥ श्रीशंकरगुरुकुलपत्रिका ॥

# THE JOURNAL
## OF THE
# SRI SANKARAGURUKULAM, SRIRANGAM.

**Editor:** Gurubhaktasikhamani, Sastraprasarabhushana, T. K. Balasubrahmanya Aiyar, B A., Founder of Sri Sankaragurukulam, Srirangam.

**Literary Adviser:** Vidyasagara, Vidyavacaspati, P. P. Subrahmanya Sastri B. A. (Oxon), M. A., Curator, Government Oriental Manuscripts Library and Professor of Sanskrit, Presidency College, Madras.

**The Main features are :**

1. The publication of rare and hitherto unpublished works of writers of established reputation on all branches of learning bearing on Hindu Culture and Learning.
2. The reviewing of books and periodicals on current thought
3. The encouraging of the producion of original compositions in Sanskrit by contemporary writers and poets

**Annual Subscription Rs. 6/only.**

For *bona fide Vidyarthis* on production of certificate from their teacher Rs. 4/only

The Journal is now published Quarterly. If sufficient encouragement is forthcoming it is hoped to convert it into a Bimonthly and even a Monthly

**Advertisement rates are :** 1 Full page for one insertion Rs. 10/—

Do. for one year Rs. 30/—

½ page for one inserion Rs. 6/—

½ ,, for one year Rs. 20/—

THE MANAGER,

***The Journal of the Sri Sankaragurukulam,***

***SRIRANGAM.***

॥ श्रीः ॥

# ॥ श्लोकानुक्रमणिका ॥

